# ॥ अथ पंचकशांतिः॥

॥ श्रीः॥

आचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्य **मम आत्मनः० श्रीपरमेश्वरप्रीत्यर्थं अमुकगोत्रस्यामुकशर्मणः पितुः पंचकनक्षत्रे मरणाधोगति- दोषशुद्धिपूर्वकं मम - अशुभत्व- परिहारार्थं वंशारिष्ट- विनाशार्थं च नवग्रहपीडापरिहारद्वारा शुभफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं च आचार्यादिद्वारा सनवग्रहपंचकशांतिमहं करिष्ये ॥**

**तत्रादौ विष्णुस्मरणपूर्वकं आचार्यवरणं करिष्ये ॥**

आचार्यो यदत्रेत्यादि **वरदनामाग्निप्रतिष्ठां** कृत्वा - स्थंडिलात्पूर्वे पंचकलशान्स्थापयेत् ॥

महीद्यौरिति मंत्रावृत्त्या **मध्ये दिक्षु च** पंचकलशेषु पंचसुवर्णप्रतिमाः संस्थाप्य तत्र **मध्ये यमं** - यमाय सोममिति वैवस्वतो यमो यमोनुष्टुप् यमावाहने विनि० ॥ **ॐ यमाय सोमं** ० पौराणमंत्रः - दंडहस्तं यमं देवं ० **यमाय नमः यमं आवाहयामि** (यमप्रीत्यर्थं जपः- यत्ते यमं ० परेयिवांसं ०) ॥

**पूर्वे रुद्रं** - इमा रुद्राय स्थिरधन्वन इति वसिष्ठो रुद्रो जगती रुद्रावाहने ० ॥ **ॐ इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने । अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता**

**शृणोतु नः** ॥ पौराणमंत्रः - रुद्रो देवो वृषारूढः० **रुद्राय ० रुद्रं०** (रुद्रप्रीत्यर्थं जपः- इमा रुद्राय स्थिरधन्वने ०) ॥ दक्षिणे अग्निं - अप नः शोशुचदघमिति कुत्सोग्निर्गायत्री अग्न्यावाहने० ॥ **अप नः शोशुंचदघमग्ने शुशुग्ध्या रयिम् । अप नः शोशुंचदघम् ॥** पौराणमंत्रः - आग्नेयः पुरुषो रक्तः० **अग्नये० अग्निं०** (अग्निप्रीत्यर्थं जपः- अप नः शोशुं०) ॥ पश्चिमे विष्णुं - इदं विष्णुः काण्वो मेधातिथिर्विष्णुर्गायत्री । विष्णवावाहने० ॥ **ॐ इदं विष्णुर्वि चंक्रमे त्रेधा नि दंधे पदं । समूंह्ळमस्य पांसुरे ॥** पौराणमंत्रः - यस्य स्मरणमात्रेण ० **विष्णवे० विष्णुं०** (विष्णुप्रीत्यर्थं जपः- विष्णोर्नु कं०) ॥ उत्तरे इंद्रं - इंद्र त्वा विश्वामित्र इंद्रो गायत्री॥ इंद्रावाहने ० ॥ **ॐ इंद्रं त्वा वृषभं वयं सुते सोमें हवामहे । स पांहि मध्वो अंधंसः ॥** पौराणमंत्रः - इंद्रः सुरपतिः श्रेष्ठः० **इंद्राय० इंद्रं०** (इंद्रप्रीत्यर्थं जपः - आशुः शिशांनो० श्रीसूक्तं च ) ॥

ततस्तेषु पंचकलशेषु धनिष्ठादि- पंचनक्षत्रदेवताऽऽवाहयेत् ॥ मध्ये वसून्- ज्मया अत्र वसिष्ठो वसवस्त्रिष्टुप् । वस्वावाहने ० । **ॐ ज्मया अत्र वसंवो रन्त देवा उरावन्तरिंक्षे मर्जयन्त शुभ्राः । अर्वाक्पथ उंरुज्रयः कृणुध्वं श्रोतां दूतस्यं जग्मुषों नो अस्य** ॥ पौराणमंत्रः - श्रविष्ठादेवतां वंदे वसुन्वरधराश्रिताम् ।

शंखचंक्रांकितकरां किरीटांकितमस्तकाम् ॥ **वसुभ्यो ० वसून्०** ॥ पूर्वे वरुणं- तत्वायामि शुन:शेपो वरुणस्त्रिष्टुप् । वरुणावाहने०। **ॐतत्त्वांयामि ब्रह्मंणा ०** पौराणमंत्र: - वरुणं सततं वंदे सुधाकलशधारिणम् । पाशहस्तं शतभिषग्देवतां देववंदितम् ॥ **वरुणाय ० वरुणं ०** ॥ दक्षिणे अजैकपादं- उतनोहिर्बृध्न्यजिश्वा भरद्वाज अजैकपादत्रिष्टुप् । अजैकपादावाहने० । **ॐ उत नोऽहिर्बुध्न्यं: शृणोत्वज एकंपात्पृथिवी संमुद्रः । विश्वे देवा ऋंतावृधो हुवानाः स्तुता मन्त्रां: कविशस्ता अंवन्तु** ॥ पौराणमंत्र: - शिरसामहजं वंदे ह्येकपादं तमोपहम् । मुदे प्रोष्ठपदेशानं सर्वदेवनमस्कृतम् ॥ **अजैकपदे० अजैकपादं०** ॥ पश्चिमे अहिर्बुध्न्यं- अभि ये मिथो मैत्रावरुणिर्वसिष्ठोऽहिर्बुध्न्यस्त्रिष्टुप् । अहिर्बुध्न्यावाहने विनि० । ॐ **अभि ये मिथो वनुष: सपंन्ते रातिं दिवो रांतिषाचं: पृथिव्या: । अहिर्बुध्न्यं उत नं: शृणोतु वरूत्र्येकंधेनुभिर्नि पांतु** ॥ पौराणमंत्र: - अहिर्मे बुध्नियो भूयान् मुदे प्रोष्ठपदेश्वर:। शंखचंक्रांकितकरः किरीटोज्वलमौलिमान् ॥ **अहिर्बुध्न्याय ० अहिर्बुध्न्यं ०** । उत्तरे पूषणं पूषा गा बार्हस्पत्यो भरद्वाज: पूषा गायत्री । पूषावाहने विनियोग:। **ॐ पूषागा अन्वेंतुनः पूषा रंक्षत्वर्वंत: । पूषा वाजं सनोतु न:॥** पौराणमंत्र: - पूषणं सततं वंदे रेवतीशं समृद्धये । वराभयोज्वलकरं रत्नसिंहासने स्थितम्

**|| पूष्णे नम: पूषणं आवा० ||**

ततः यमादयः- यमं- धर्मराजं- मृत्युं- अंतकं- वैवस्वतं- कालं- सर्वभूतक्षयकरं - औदुंबरं- दध्नं- नीलं- परमेष्ठिनं- वृकोदरं- चित्रं- चित्रगुप्तं आवाह्य सर्वा देवता: षोडशोपचारैः संपूज्य शांतिसूक्तानि जपेत् -

**यमप्रीत्यर्थं- यत्ते यममिति** द्वादशर्चस्य सूक्तस्य बंधु: श्रुतबंधुर्विप्रबंधुर्गौपायना मनआवर्तनम् यमो वाऽनुष्टुप् । जपे०। (८-१-२०/२१)
(यत्ते यमं' -दिवं' -भूमिं' -चतस्रः' - समुद्रं' च वै । मरीची'र्वा - अपः' - सूर्यं' - पर्वतांश्च ततः परम्। विश्वं' - परा'स्तथा - भूतं' द्वादशर्च: प्रकीर्त्तिताः ॥)

**परेयिवांसमिति** षोळशर्चस्य सूक्तस्य वैवस्वतो यम ऋषि: यमो देवता षष्ठ्या अंगिरः पित्रथर्वभृगुसोमाः दशम्यादि_ तिसृणां श्वानौ त्रिष्टुप् त्रयोदशी_ चतुर्दशी_ षोडश्योनुष्टुभः पंचदशी बृहती (प्रेहि प्रेहीत्यादि_ तिसृणां पितृदेवता वैकल्पिकी)। जपे०॥ (७-६-१५)

**रुद्रप्रीत्यर्थं- इमा रुद्रायेति** चतुर्ऋचस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठो रुद्रो जगती अंत्या त्रिष्टुप् । जपे

०॥(५-४-१४)
**अग्निप्रीत्यर्थं- अप नः शोशुचदघ**मित्यष्टर्चस्य सूक्तस्य कुत्सोग्निर्गायत्री। जपे०॥ (१-७-५) *(अप-सुक्षेत्रिया-प्र-प्र" - प्रयत्-त्वं हि -द्विषः- स नः।)*
**विष्णुप्रीत्यर्थं- विष्णोर्नु कमिति** षण्णां दीर्घतमा विष्णुस्त्रिष्टुप्। जपे०॥ (२-२-२४)
**इंद्रप्रीत्यर्थं- आशुः शिशान इति** त्रयोदशर्चस्य सूक्तस्य अप्रतिरथ इंद्रस्त्रिष्टुप्। जपे ०॥ (८-५-२२/२३)
**श्रीसूक्तं च** हिरण्यवर्णामिति पंचदशर्चस्य सूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः श्रीर्देवता आद्यास्तिस्रोनुष्टुभः चतुर्थी बृहती पञ्चमीषष्ठ्यौ त्रिष्टुभौ ततोष्टावनुष्टुभः अंत्या आस्तारपङ्क्तिः। इति जपेत्।

**उत्तरे - ग्रहान् कलशं च संपूज्य** प्रार्थयेत्।
अन्वादध्यात् ॥ अस्मिन्नन्वाहितऽग्नौ ० चक्षुषी आज्येन अत्रप्रधानं
नवग्रहान् आज्यसमित्तिलैः प्रत्येकं अष्टवारं तथा
वस्वादि - पंचनक्षत्रदेवताः समित्तिलाज्याहुतिभिः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरशतवारं तथा
यमादि चतुर्दशदेवताः प्रत्येकं अष्टवारं चरुणा यक्ष्ये ॥

स्विष्टकृतमग्निं शेषेणेति परिसमूहनादि **तत्तद्देवतायै तूष्णीं निर्वापादि** कृत्वा द्रव्यत्यागं कृत्वा **ग्रहनक्षत्रदेवताभ्यो तत्तन्मंत्रैर्होमं** कृत्वा यमादिचतुर्दशदेवताभ्यो नाममंत्रैर्होमं कुर्यात् ॥ ततः **स्विष्टकृदादिहोमं** समाप्य **बलिदानं** कृत्वा **पूर्णाहुतिं** जुहुयात् ॥ **देवतोत्तरपूजनं- यजमानाभिषेकं** च कुर्यात् ॥

ततः यजमानः - **सर्वारिष्टशांत्यर्थं ब्राह्मणद्वारा शांतिसूक्तपाठं, आज्ये स्वमुखावलोकनं तथा ब्रह्म- विष्णु- महेशेंद्र- वरुण- प्रीतये (द्रव्यद्वारा) प्रियंगु- गोधूम- माष- मुद्ग- यव- व्रीहि- तिल- सुवर्णदानानि करिष्ये।** तानि दद्यात् ॥

ततो **ब्रह्मविष्ण्वादिदेवता - यमादिदेवतासंतुष्ट्यर्थं नारिकेलेनार्घ्यप्रदानं करिष्ये।** ॐ ब्रह्मजज्ञानं ० यमाय सोमं० यमाय धर्मराजाय मृत्यवे० इदमर्घ्यदानं ब्रह्मादिभ्यः समर्पयामि ॥

विभूतिधारणांते आचार्यादिभ्यः गोदानं दक्षिणां च दत्वा देवताग्नी विसृज्य **'स्वस्य अशुभत्वपरिहारोऽस्तु'** इति वाचयेत् ॥

इति पंचकशांतिः ॥

वैभव कुलकर्णी पुणे. ९४२२००२७१४

यत्ते यममिति द्वादशर्चस्य सूक्तस्य बंधु:श्रुतबंधुर्विप्रबंधुर्गौपायना यमोऽनुष्टुप् । जपे०।
(८-१-२०/२१)
(यत्ते यमं' -दिवं' -भूमिं' -चतस्रः' - समुद्रं' च वै । मरीचीर्'वा - अपः' - सूर्यं' - पर्वतांश्च ततः परम्। विश्वं' - परा'स्तथा - भूतं' द्वादशर्चाः प्रकीर्त्तिताः ॥ )

ॐ यत्ते यमं वैवस्वतं मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥१
यत्ते दिवं यत्पृथिवीं ०॥२
यत्ते भूमिं चतुर्भृष्टिं ०॥३
यत्ते चतस्रः प्रदिशो ०॥४
यत्ते समुद्रमर्णवं ० ॥५
यत्ते मरीचीः प्रवतो ० ॥६
यत्ते अपो यदोषधीः ० ॥७
यत्ते सूर्यं यदुषसं ०॥८
यत्ते पर्वतान्बृहतो ०॥९
यत्ते विश्वमिदं जगन्मनो ०॥१०
यत्ते पराः परावतो ०॥११

यत्ते भूतं च भव्यं च ०॥१२

परेयिवांसमिति षोळशर्चस्य सूक्तस्य वैवस्वतो यम ऋषिः यमोदेवता षष्ठ्या अंगिरः पित्रथर्वभृगुसोमाः दशम्यादितिसृणां श्वानौ त्रिष्टुप् त्रयोदशीचतुर्दशीषोडश्योनुष्टुभः पंचदशी बृहती (प्रेहिप्रेहीत्यादि- तिसृणां पितृदेवता वैकल्पिकी)।जपे०॥ (७-६-१५)

**ॐ परेयिवांसं** प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥ १ ॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ । यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥ २ ॥

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः । याँश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥ ३ ॥

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व ॥ ४ ॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥ ५ ॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।

तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ६ ॥
प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥
७ ॥
सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥ ८ ॥
अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ॥
अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति ॥ १० ॥
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥
११ ॥
उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ १२ ॥
यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो
गच्छत्यग्निदूतो अरंकृतः ॥ १३ ॥
यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत । स नो देवेष्वा
यमद्दीर्घमायुः प्र जीवसे ॥ १४ ॥
यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन । इदं नम ऋषिभ्यः

पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ १५ ॥
त्रिकंद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत्। त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥ १६ ॥

इमा रुद्रायेति चतुर्ऋचस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठो रुद्रो जगती अंत्या त्रिष्टुप्। जपे ०॥(५-४-१४)

**ॐ इमा** रुद्रायं स्थिरधंन्वने गिरंः क्षिप्रेषंवे देवायं स्वधाव्नें । अषांह्ळाय सहंमानाय वेधसें तिग्मायुंधाय भरता शृणोतुं नः ॥ १

स हि क्षयेंण क्षम्यंस्य जन्मंनः साम्रांज्येन दिव्यस्य चेतंति । अवन्नवंन्तीरुपं नो दुरंश्चरानमीवो रुंद्र जासुं नो भव ॥२

या तें दिद्युदवंसृष्टा दिवस्परिं क्ष्मया चरंति परि सा वृंणक्तु नः । सहस्रं ते स्वपिवात भेषजा मा नंस्तोकेषु तनंयेषु रीरिषः ॥३

मा नों वधी रुद्र मा परां दा मा तें भूम प्रसिंतौ हीळितस्यं । आ नों भज बर्हिषिं जीवशंसे यूयं पांत स्वस्तिभिः सदां नः ॥४

अप नः शोशुचदघमित्यष्टर्चस्य सूक्तस्य आङ्गिरसःकुत्सोग्निर्गायत्री।जपे०॥ (१-७-५)
(अप-सुक्षेत्रिया-प्र-प्र" - प्रयत्-त्वं हि -द्विषः- स नः।)

**ॐअप॑ नः॒** शोशु॑चद॒घमग्ने॑ शुशु॒ग्ध्या र॒यिम्।
अप॑ नः॒ शोशु॑चद॒घम् ॥१
सुक्षे॒त्रि॒या सु॑गातु॒या व॑सू॒या च॑ यजामहे। अप॑ नः॒ ० ॥२
प्र यद्भन्दि॑ष्ठ एषां॒ प्रास्माका॑सश्च सू॒रयः॑ । अप॑ नः॒ ० ॥३
प्र यत्ते॑ अग्ने सू॒रयो॒ जाये॑महि प्र ते॑ व॒यम्। अप॑ नः॒ ० ॥४
प्र यद॒ग्नेः सह॑स्वतो वि॒श्वतो॒ यन्ति॑भा॒नवः॑ । अप॑ नः॒ ० ॥५
त्वं हि वि॑श्वतोमुख वि॒श्वतः॑ परि॒भूरसि॑ ।अप॑ नः॒ ० ॥६
द्विषो॑ नो विश्वतोमु॒खाति॑ ना॒वेव॑ पारय ।अप॑ नः॒ ० ॥७
स नः॒ सिन्धु॑मिव ना॒वयाति॑ पर्षास्व॒स्तये॑ ।
अप॑ नः॒ शोशु॑चद॒घम् ॥८

विष्णो॒र्नु कमिति षण्णां दीर्घतमा विष्णुस्त्रिष्टुप्। जपे०॥
(२-२-२४)

**ॐविष्णो॒र्नु** कं॑ वी॒र्या॑णि॒ प्र वो॑चं॒ यः पार्थि॑वानि विम॒मे रजां॑सि। यो अस्क॑भाय॒दुत्त॑रं स॒धस्थं॑ विचक्रमा॒णस्त्रे॒धोरु॑गा॒यः ॥१
प्र तद्विष्णुः॑ स्तवते वी॒र्ये॑ण मृगो न भी॒मः कु॑च॒रो गि॑रि॒ष्ठाः ।
यस्यो॒रुषु॑ त्रि॒षु वि॒क्रम॑णेष्वधिक्षि॒यन्ति॒ भुव॑नानि॒ विश्वा॑ ॥२
प्र विष्ण॑वे शू॒षमे॑तु मन्म॑ गिरि॒क्षित॑ उरुगा॒याय॒ वृष्णे॑ ।
य इ॒दं दी॒र्घं प्रय॑तं स॒धस्थ॒मेको॑ विम॒मे त्रि॒भिरित्प॒देभिः॑ ॥३

यस्य॒ त्री पू॒र्णा मधु॑ना प॒दान्यक्षी॑यमाणा स्व॒धया॑ मद॑न्ति ।
य उं त्रि॒धातु॑ पृथि॒वीमु॒त द्यामेको॑ दा॒धार॒ भुव॑नानि॒ विश्वा॑ ॥४
तद॑स्य प्रि॒यम॒भि पाथो॑ अश्यां॒ नरो॒ यत्र॑ देव॒यवो॒ मद॑न्ति ।
उ॒रु॒क्र॒मस्य॒ स हि बन्धु॑रि॒त्था विष्णो॑: प॒दे प॑र॒मे मध्व॒ उत्स॑: ॥५
ता वां॒ वास्तू॑न्युश्मसि॒ गम॑ध्यै॒ यत्र॒ गावो॒ भूरि॑शृङ्गा अ॒यास॑: ।
अत्राह॒ तदु॑रुगा॒यस्य॒ वृष्ण॑: पर॒मं प॒दमव॑ भाति॒ भूरि॑ ॥६

आ॒शुः शिशा॑न इति त्रयोदशर्चस्य सूक्तस्य अप्रतिरथ इंद्रस्त्रिष्टुप्। जपे ०॥ (८-५-२२/२३)

**ॐ आ॒शुः** शिशा॑नो वृष॒भो न भी॒मो घ॑नाघ॒नः क्षोभ॑णश्चर्षणी॒नाम् । सं॒क्रन्द॑नोऽनिमि॒ष ए॑कवी॒रः श॒तं सेना॑ अजयत्सा॒कमिन्द्र॑: ॥१
सं॒क्रन्द॑नेनानिमि॒षेण॑ जि॒ष्णुना॑ युत्का॒रेण॑ दुश्च्यव॒नेन॑ धृ॒ष्णुना॑ । तदिन्द्रे॑ण जयत॒ तत्स॑हध्वं॒ युधो॑ नर॒ इषु॑हस्तेन॒ वृष्णा॑ ॥२
स इषु॑हस्तै॒: स नि॑ष॒ङ्गिभि॑र्व॒शी संस्र॑ष्टा॒ स यु॒ध इन्द्रो॑ ग॒णेन॑ । सं॒सृ॒ष्ट॒जित्सो॑म॒पा बा॑हुश॒र्ध्यु॑१॒ग्रध॑न्वा॒ प्रति॑हिताभि॒रस्ता॑ ॥३
बृह॑स्पते॒ परि॑ दीया॒ रथे॑न रक्षो॒हामित्राँ॑ अप॒बाध॑मानः । प्र॒भ॒ञ्जन्त्सेना॑: प्रमृ॒णो यु॒धा जय॑न्न॒स्माक॑मेध्यवि॒ता रथा॑नाम् ॥४

बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।
अभिवीरो अभिसंत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥५

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमं संजाता अनु वीरयध्वमिन्द्रं सखायो अनु सं रभध्वम् ॥६

अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाळयुध्यो३ऽस्माकं सेना अवतु प्र युत्सु ॥७

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥८

इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥९

उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि ।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥१०

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु
। अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु ॥११

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि
प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥१२

प्रेता जयता नर इन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु
बाहवोऽनाधृष्या यथासथ ॥१३

हिरण्यवर्णामिति पंचदशर्चस्य सूक्तस्य

आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषय: श्रीर्देवता
आद्यास्तिस्रोनुष्टुभ: चतुर्थी बृहती पञ्चमीषष्ठ्यौ त्रिष्टुभौ
ततोष्टावनुष्टुभ: अंत्या आस्तारपङ्क्ति: । जपे०॥

**ॐ हिरण्यवर्णां** हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥
अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्
श्रियंन्देवीमुपह्वये श्रीर्मादेवीर्जुषताम् ॥३॥
कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्
।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥
५॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥
६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७॥

क्षुत्पिंपासामंलां ज्येष्ठामलक्ष्मीं नांशयाम्यहंम् ।
अभूंतिमसंमृद्धिं च सर्वां निर्णुद मे गृंहात् ॥८॥
गंधंद्वारां दुंराधर्षां नित्यपुंष्टां करीषिणींम् ।
ईश्वरीं सर्वभूतानां तामिहोपंह्वये श्रियंम् ॥९॥
मनंसः काममाकूंतिं वाचः सत्यमंशीमहि ।
पशूनां रूपंमन्नस्य मयि श्रीः श्रंयतां यशः ॥ १०॥
कर्दमेन प्रंजाभूता मयि संम्भव कर्दम ।
श्रियं वासयं मे कुले मातरं पद्ममालिंनीम् ॥११॥
आपंः सृजन्तुं स्निग्धानि चिक्लीत वसं मे गृहे ।
नि चं देवीं मातरं श्रियं वासयं मे कुले ॥१२॥
आर्द्रां यः करिंणी यष्टिं सुवर्णां हेममालिंनीम् ।
सूर्यां हिरण्मंयीं लक्ष्मीं जातंवेदो म आवंह ॥ १३ ॥
आर्द्रां पुष्करिंणीं पुष्टिं पिङ्गलां पद्ममालिंनीम् ।
चन्द्रां हिरण्मंयीं लक्ष्मीं जातंवेदो म आवंह ॥१४॥
तां म आवंह जातवेदो लक्ष्मीमनंपगामिनींम् ।
यस्यां हिरंण्यं प्रभूंतं गावों दास्योऽश्वांन्विन्देयं पुरुंषानहम् ॥
१५ ॥
यः शुचिः प्रयंतो भूत्वा जुहुयांदाज्यमन्वंहम् ।
श्रियः पञ्चदंशर्चं च श्रीकामंः सततं जंपेत् ॥ १६ ॥
वैभव कुलकर्णी

९४२२००२७१४
पुणे.

ही शांति मृतदिवसापासून ११ व्या दिवशी करायची आहे. काही कारणाने त्या दिवशी करणे झाले नाही तर नंतरही करावी. मृताला अधोगती , हा दोष व त्याच्या कुळात वंशारिष्ट, हे अशुभ फळ सांगितले असल्याने , ते नष्ट होण्यासाठी ११ दिवसापासून शीघ्रातिशीघ्र  कोणत्याही दिवशी शांतिकर्म करावे.

**निधनशांतिच्या आधी करायची असेल तर -**

घराबाहेर (अंगणात) करणे. अग्निआहुतीची गरज नाही. कर्त्याला अशुभत्व असल्याने त्याने गणपतीपूजन सुद्धा करु नये. देवतापूजन , बलिदान, पूर्णाहुती इ. कर्मे आचार्यद्वारा करावीत.

मात्र शांतिकलशाभिषेक, विभूतिग्रहण , आज्यावेक्षण, विशेष-दान-अर्घ्य - ही कर्मे कर्त्याने करावीत.

**निधनशांतिच्या नंतर करायची असेल तर -**

निधनशांतिने घरातील अशुभत्व संपल्याने हे शांतिकर्म घरी करावे.

अग्निआहुती असलेल्या  शुभदिवशी शांति करावी. पंचक/ त्रिपाद नक्षत्रदिवशीं  अग्निआहुती नसेल तरी करावी.

गणपतीपूजनादि देवतापूजन पूर्णाहुती इ. सर्वकर्मे कर्त्याने करावीत.